# राजप्रशस्तिः ।

कलिकातागवर्णमेण्टसंस्कृतपाठशालाध्यापकचरेण

श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्येण

विरचिता ।

बि, ए, उपाधिधारिणा

श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण प्रकाशिता ।

---

॥ तृतीयसंस्करणम् ॥

कलिकातानगरे

सरस्वतीयन्त्रे मुद्रिता ।

---

ख्रीं १८७६ ।




---

## पण्डित-कुलतिलक-पूज्यपाद-श्रीमत-तर्कवाचस्पति-पाद-प्रणीत-प्रकाशित-पुस्तकान्येतानि ॥

| | | |
|---|---|---|
| १ | आशुबोधव्याकरणम् | १।० |
| २ | धातुरूपादर्शः | २ |
| ३ | शब्दस्तोममहानिधिः (संस्कृत अभिधान) | १० |
| ४ | सिद्धान्तकौमुदीसरलाटीकासहिता | ११ |
| ५ | सिद्धान्तबिन्दुसार (वेदान्त) | ॥० |
| ६ | तुलादानादिपद्धति (बङ्गाक्षरैः) | ४ |
| ७ | गयाश्राद्धादिपद्धति | १ |
| ८ | शब्दार्थ रत्न | ॥।० |
| ९ | वाक्यमञ्जरी (बङ्गाक्षरैः) | ।० |
| १० | छन्दोमञ्जरी तथा छन्दरत्नाकर सटीक | ॥= |
| ११ | वेणीसंहारनाटक सटीक | १ |
| १२ | मुद्राराक्षस नाटक सटीक | १॥० |
| १३ | रत्नावली | ॥।० |
| १४ | मालविकाग्निमित्र सटीक | १॥० |
| १५ | धनञ्जय विजय सटीक | ।० |
| १६ | महावीरचरित | १॥० |
| १७ | साङ्ख्यतत्त्वकौमुदी सटीक | २ |
| १८ | वैयाकरणभूषणसार | ॥।० |
| १९ | लीलावती | ॥।० |
| २० | वीजगणित | १ |
| २१ | शिशुपालवध सटीक (माघ) | ४ |
| २२ | किरातार्जुनीय (भारवि) | २॥० |
| २३ | कुमारसम्भव पूर्व्वखण्ड सटीक | ॥।० |
| २४ | कुमारसम्भव उत्तरखण्ड | ॥० |
| २५ | अष्टकम् पाणिनीयम् | ॥।० |
| २६ | वाचस्पत्यम् (संस्कृत वृहदभिधान) | १०० |
| २७ | कादम्बरी सटीक | ३ |
| २८ | राजप्रशस्ति | = |
| २९ | अनुमानचिन्तामणि तथा अनुमानदीधिति | ४ |
| ३० | सर्वदर्शनसंग्रह | १ |
| ३१ | भामिनीविलास सटीक | १ |
| ३२ | हितोपदेश सटीक | ॥० |
| ३३ | भाषापरिच्छेदमुक्तावलीसहित | १ |
| ३४ | बहुविवाहवाद | ।० |
| ३५ | दशकुमारचरित सटीक | १॥० |
| ३६ | परिभाषेन्दुशेखर | ॥।० |
| ३७ | कविकल्पद्रुम (वोपदेवकृत) | ॥० |
| ३८ | चक्रदत्त (वैद्यक) | १॥० |
| ३९ | उणादिसूत्र सटीक | / |
| ४० | मेदिनीकोष | १ |
| ४१ | पञ्चतन्त्रम् (श्रीविष्णुशर्म्मणा सङ्कलितम्) | २॥० |
| ४२ | विद्वन्मोदतरङ्गिणी (चम्पू काव्य) | ॥० |
| ४३ | माधवचम्पू | ।= |
| ४४ | तर्कसंग्रह (इंराजी अनुवाद सहित) | ॥० |
| ४५ | प्रसन्नराघव नाटक (श्रीजयदेवविरचित) | १ |
| ४६ | विवेकचूडामणि (श्रीमत् शङ्कराचार्य्य विरचित) | ।= |

राजप्रशस्तिः ।

—०—

स्वस्ति श्रीमन्महाराजाधिराजेषु निवेदनम् ।
तारानाथद्विजस्येदमाशीराशिपुरःसरम् ।
मला कमलालयालये लसतात्तेऽचपला निरन्तरम् ।
दने वचनाधिपालिका समरे तेऽग्रचरास्तु कालिका ॥
वत्तसद्मनि तवास्तु सन्तत वासुदेवपदवाच्यधाम तत् ।
न सर्वमिदमाततं ततं पालितं तदनु संहृतं क्रमात् ॥
ोगमार्गनिहितेन चेतसा विश्वरूपमनघं विभावय ।
न लब्धपुरुषार्थगार्थकं सार्थकं जननमस्तु भूप ! ते ॥

सवीजा हृद्वृत्तिः क्रममनुगता वीजरहिता
परे तत्त्वे सम्यग् लयमुपगता जन्मशमनी ।
त्रयाणां तापानामतिशयसमूलक्षयकरी
प्रगाढं ते भूयात् प्रकृतिपुरुषव्यक्तिजननी ॥

संप्रज्ञातसमाधिधूतनिरये चित्ते क्रमादुन्नताऽ
सम्प्रज्ञातसमाधिना नरपते ! भूयात् विवेकोदयः ।
अत्यन्तः पुरुषार्थलाभ इह ते भूयाच्च भूमीपते !
येनाश्रान्तभवेन तेन न भवे भूयात् पुनः सम्भव ॥

चित्तप्रसादनकरी परिकर्म्मरूपा
ज्योतिष्मती मधुमती च तथा विशोका ।
आनन्दया च सहिता सततं चकास्तु
भूपालवर्य्य ! सततं तव चित्तवृत्ति ॥

मैत्री साधुषु दुःखितेषु करुणोपेक्षा च पापात्मसु
वृत्तिः सा हृदयस्य भूप। मुदिता सौख्यान्वितेष्वस्तु ते।
एतासां परिशुद्धभाववशतः स्थैर्यान्वितं मानसम्
सर्व्वानर्थनिवर्हणाय नृप। ते शान्तिं परामृच्छतु॥

योगोक्तलक्षणयमादिभिरष्टसंख्यै
र्योगानुशीलनमनुक्षणमातनु त्वम्।
तुष्टीः सदा नवविधा नृपते। लभस्व
लभ्यन्तु योगजनितास्तव सिद्धयोऽष्टौ॥

क्लेशजन्मपरिहीण ईश्वरो
वासनारहित एष भूपते।
कर्म्मपाकपरिमुक्त आदिम—
श्चेतसि प्रणिहितं सदास्तु ते॥

सारूप्यं विषयेषु सन्ततमनुस्यूतं विहायान्तरम्
योगं वृत्तिनिरोधलक्षणमथो चित्तस्य भूपाप्नुहि।
येन स्यात् परनिर्वृतिर्न च पुनर्जन्मादिकं भूपते।
जायेतापि भवार्णवे न च गतिः संसारमूलक्षयात्॥

शान्तो दान्तेन्द्रियः सन्नुपरतिसहितो दुःखसौख्ये सहिष्णु
र्विश्वासी शास्त्रवाक्ये गुरुवचसि तथा, श्रद्धया संयुतश्च।
आत्मन्येवात्मबोधान्नियतनिरतिभृत् सर्वयोगाङ्गयुक्तो
भूया भूपाल। भूयो भवभवनसमुच्छेदबोधोदयार्थम्॥

आपाततो ज्ञातवेदवेदाङ्गार्थोऽपकल्मषः।
नित्यनैमित्तिकप्रायश्चित्तोपास्तिपरोऽसि यत्॥

नित्यानित्यविवेकिता तव सदा मोक्षे च तीव्रस्पृहा
वैराग्यं विषये तवास्ति सततं शान्त्यादिषट्कं तथा।

तेन ब्रह्मविचारणे नरपते । मन्येऽधिकारी भवान्
तस्मात् सद्गुरुसेवनेन सततं तत्रैव यत्नं क्रियाः ॥ युग्मम्
वेदार्थानुभवेन यज्ञविधिना दानैस्तपश्चर्य्यया
प्रायश्चित्तविधानतो विविदिषा जातेति मन्ये तव ।
यस्या ब्रह्मविचारणाय यतते वित्तादिसुत्यैषण ।
भूयात् ते नृप । वेदवाक्यजनिता ब्रह्मात्मसाक्षात्कृतिः ॥
यया भक्त्या सम्यक् प्रसृतमपि चैतन्यममलम्
गुहायां सद्रत्नं तिमिरनिकरेणावृतमिव ।
जहि त्वं विक्षेपाह्वयपरमशक्त्या पुनरमुम्
ततस्ते चैतन्यं हृदयसदने संस्फुरतु तत् ॥
दोषानशेषानपहाय सम्यग्बोधेन जीवन्नपि मुक्त एव ।
प्रारब्धकर्म्मक्षयतः परस्ताद्विदेहकैवल्यमवाप्नुहि त्वम् ॥
याथार्थ्यबोधेन निवृत्तमिथ्या—ज्ञानस्य दोषादिविवर्जितस्य ।
अजन्मनस्ते क्रमशोऽप्रवृत्तेरात्यन्तिकी दुःखनिवृत्तिरास्ताम् ॥
शान्ते स्वान्ते निशान्ते तव वसतुतरां सर्वलोकैकसाक्षी
भूयोभूयोऽभिभूया रिपुकुलनिवहं सर्वधामैकधामन् । ।
प्रत्यूहव्यूहराशिस्तव विलयमितो शुद्धयाज्ञास्तु भूयात्
भूपे भूपेऽनुरूपे भवतु च नितरां तेऽनुकम्पा सदैव ॥
सर्वप्रत्ययसङ्गता निगदिता सत्साधनैरन्विता
लिङ्गालिङ्गयुता विभक्तिवचनैर्नित्यं समुद्भासिनी ।
स्फोटात्मा प्रकृतिस्त्वदीयहृदये नित्यं जरीजृम्भताम्
नित्या ब्रह्ममयी विवर्त्तजगतामर्थात्मनामाश्रयः ॥
प्रजा प्रजापाल । पितेव पाया घोरादपायात् जगदेकमान्य । ।
समस्तविज्ञानविवर्द्धनार्थं लोकानशेषानिह शिक्षय त्वम् ॥

धर्म्मेषु चित्तं रमतां निरन्तरं कुकर्म्मप्रवृत्तेश्च निवर्त्ततां तव।
प्रजासु कल्याणकरी हृदन्तरे वृत्तिस्त्वदीया सततं विराजताम्॥

माधुर्य्यादिगुणेषु षां सुवचसां रीत्यादिसंशोभिनम्
सर्व्वालङ्कृतिशालिनां कलयसे सम्यक् रसास्वादनाम्।
सत्काव्यार्थविभावनैकनिपुणः प्राज्ञोऽसि तेनास्मदहम्
कीर्त्तिस्यूतगुणादिवर्णनविधौ जातस्तवोत्कण्ठितः॥

यावद्यस्य मतिर्विधावति परं तावद्धि तेनोच्यते
निःसीमे भवतोगुणार्णवइह प्रान्तं कथं प्राप्नुयाम्।
यावन्तस्तु गुणा मम श्रुतिगतास्तावन्त एवोदिताः
क्षन्तव्यं क्षितिपाल! चापलमिदं सोढुः क्षमैवोचिता॥

अहो विधातुः करुणा प्रजासु ययाक्षराणीह समुत्ससर्ज।
येभ्योऽक्षरेभ्यो हृदयस्य भावः प्रकाशनेऽन्यस्य विबोधनार्थम्॥

भाव स्वात्मगुहाशयं न परया वेद्यं परैर्व्यञ्जयन्
वर्णास्तोममहानिधिर्विधिकृतो लोकोपकाराय यत्।
तेनैव व्यवहारिणोवयमहो वर्णेषु सर्वे वशा
वर्णाद्यस्त्वमतश्च वर्णतुलया राजन्! पुरोवर्ण्यसे॥

वर्ण्यन्ते विषया यैस्ते लोके वर्णा इतीरिताः।
ज्ञातेषु तेषु वर्णेषु सार्वज्ञ्यात् लब्धवर्णता॥

आरात्यकं दुःखमितीह लोके विष्णुर्यथाकारपदाभिधेयः।
नाशाय दुःखग्रहणात्तथैव राजं स्त्वमाकारपदेन वाच्यः।
कं सुखं हि कुरुते प्रजापतिस्तेन तस्य विदिता ककारता।
सर्वलोकसुखकारता यत स्त्वय्यतस्तव ककारता मता॥
अतोऽसि वर्णादिरनाद्यवर्णा वर्गोत्तमश्चादिमवर्गरूपः।
ततोहि लोके मनुजेन्द्र! चित्रं सर्वैं विरोधास्त्वयि नाशमाप्ताः॥

प्रणूयसे येन समस्तलोकैस्तेनैव लोके प्रणयोऽसि राजन् ।
धर्मार्थकामत्रयतत्परत्वात् त्रयीव मूर्तिर्भवतश्चकास्ति ॥
शासनात् सर्वलोकानां शास्त्ररूपोऽसि भूपते ।।
सर्वक्षितेर्धारणाच्च धर्म इत्यभिधीयसे ॥
सर्वलोके राजमानः प्रकृतीश्चापि रञ्जयन् ।
संगतार्थं राजशब्दं बिभ्रत् लोकेषु विश्रुतः ॥

यशःस्तोमे सोमे तव समुदिते भूमिवलये
तमोहन्द स्थान क्वचिदपि यदा नाप नृपते ।।
तदा भ्रामभ्राम वियति कृतलक्ष्यं शतमद
स्तमोरूपेणेव स्थितमिति मुधा ज्योतिषकथा ॥
सत्कीर्त्तिपूर्त्तिनिवहेन धरातले ते
वर्णान्तरापहरणात् धवलीकृतेऽस्मिन् ।
वर्णेषु भेदरहिता इह सर्वलोकाः
चित्रं त्वदीयविषये नृप । वर्णभेदः ॥
त्वदीयकीर्त्त्या सितया नृपाल । सर्वेषु वर्णेषु निवारितेषु ।
चित्रं त्वदीये विषये समन्तात् सर्वेऽपि लोकाः किल लब्धवर्णाः ।

कुन्देन्दुसुन्दररुचा तव कीर्त्तिपूर्त्या
ध्वस्तं गुहास्थमपि यत् तम एतदेत्य ।
व्योमापि तद्भयवशात् किल कीर्त्तिबन्धुम्
चन्द्रं समाश्रितमदो न विधौ कलङ्कः ॥
भूमण्डलादपहृता यशसेन्दुना या
तस्यापकारकरणाय कृतोद्यमा ते ।
तद्बन्धुचन्द्रमनवं ग्रसतीव रोषात्
राहुच्छलेन किल भूप ! तमस्ततिः सा ॥

विश्वरूपपरिचिन्तयानिशं विश्वरूपभरतामुपेयिवान् ।
योहि यत्र मन आदधे चिरं तेन तस्य किल रूपमाप्यते ॥

विश्वात्मकोऽपि यतसे कमलोदयार्थम्
लोकेषु धर्म्मजननात् तमसो निरासात् ।
तेजःसहस्रनिलयो जगतां पतिश्च
भास्वांश्च नो खरकरः प्रथितः पृथिव्याम् ॥

कलयन् सकलं कलां सदा रचयन् कौमुदमुद्विजृम्भणम् ।
द्विजराजोऽसि कलङ्कभागितां न च दोषाकरताञ्च नाश्रितः ॥

भूमिनन्दनतां बिभ्रत् रक्ताङ्गत्वञ्च धारयन् ।
मङ्गलोऽपि महीपाल ! वक्रत्वं न समाश्रितः ॥

द्विजवरगणराजं नन्दयन् सौम्यमूर्त्तिः
प्रथितबुधसमाख्यो रोहिणीनन्दनश्च ।
नरपतितिलकस्त्वं राजपुत्रत्वमाप्तः
खरतरकरयोगं नाश्रितस्त्वं कदाचित् ॥

गिरां पतिर्जिष्णुमतः कचान्वितस्तारापतिश्चित्रशिखण्डिभूषितः
गुरुर्नियन्ताश्रमवृत्तिशिक्षणात् पर न चार्वाकमतप्रवर्त्तकः ॥

कविश्च काव्यप्रणयात् सदा त्वं नीत्यादिशास्त्रेषु च पारदृश्वा ।
सदोदयस्ते भुवि तीक्ष्णतेजः सम्पर्कता नास्ति मनाक् कदाचित् ॥

प्राणिहिंसाभयेनेव पद्भ्यां मन्दं चरन् भुवि ।
शनैश्चरोऽसि मित्रस्य नन्दनात् क्रूरता न ते ॥

छायया भूमिमाश्रित्य चन्द्रार्कौ तेजसा ग्रसन् ।
राहुत्वं प्राप्तवान् राजन् न चासुरत्वमाप्तवान् ॥

वैरिव्यूहविनाशनाय जगतामुत्पातकेतुर्भवान्
क्रान्तौ खेचरगास्त्वदीयवशगास्तेनासि पातो मतः ।

चित्रास्ते शतशः शिखाः समुदिता बुद्धेश्च वीर्य्यस्य च
जाने नासुरयोनिरद्भुतमिदं लोकेषु तत् विश्रुतम् ॥
विघ्नानां वारणाल्लोके गणराजत्वमागतः ।
तव नो रामवैरित्वं दानेन वारणास्वता ।
भवान् शक्तिधरः साक्षात् सेनानीत्वमुपागतः ।
सुकुमारो महीपाल ! न च प्राप्तः कुमारताम् ॥
विभूतिभूषितो भूप ! तारानाथकृतेक्षणः ।
गामाश्रित्य शिवो भूत्वा न प्राप्तः कामवैरिताम् ॥
विद्वन्मानसहंसवासनिरतो वाण्या च कण्ठे श्रितो
हस्ते साक्षकमण्डलुर्नरपते ! सूत्रं च विभ्रत् गले ।
वेदानध्ययनादिभिर्बहुलयन् उच्चैश्चतुर्भिर्मुखैः
त्वं ब्रह्मत्वमुपागतोऽपि रजसा नाक्रान्त इत्यद्भुतम् ॥
नित्यं सत्वसमाश्रितो द्विजगतिर्लक्ष्मीपतिर्भूपते !
देवानां हितकृत्सतां गतिरहो वैकुण्ठधामाश्रित ।
गोलोकैकविभूषणं च शरणं भक्तस्य कामप्रसू—
र्विष्णुस्त्वं बलिदासतां न च गतो जानेऽतिचित्रं महत् ॥
धर्मेण राजसे यस्मात् ततस्ते धर्मराजता ।
प्रजासु दण्डधरता सम्मता न तु कालता ॥
श्रीदः पुण्यजनेश्वरश्च नृपते ! भूतेशबन्धुस्तथा
जातोऽपि प्रथितः कुवेरपदभाक् नैवासि चित्रं हि तत् ।
पाशाढ्यो नृप ! वाहिनीपतिरथो पश्चाद्दिगीशोऽपि यत्
तच्चित्रं न च वारुणीमधिगतो नो वा जडेशोभवान् ॥
जाने षड्गमतङ्गजाधिपतितां जीवे च ते गौरवम्
स्वर्गीवासिसलोकतां नरपते ! लोकाधिपत्यं तथा ।

शास्त्रेषु प्रथितं सहस्रनयनत्वञ्चेतिसूक्ष्मेक्षणात्
पौरस्त्येषु समादरो न च तवेत्येतद्विचित्रं महत् ॥

मित्रोदयाय यतसे सततं पुरस्तात्
तत्रस्थलोकनिवहांस्त्वयि रागयुक्तान् ।
सुज्ञान्यदेशनिकरेषु वसुप्रदोऽभूः
पौरस्त्यवासिषु कथं न वसुप्रसारः ॥

गिरीशमेवनान् मूर्द्ध्नि वर्णचयविभूषणात् ।
गङ्गात्वमाश्रितोभूप । निम्नगत्वं न चाश्रितः ॥

रामकृष्णासेवनेन गङ्गासङ्गमनेन च ।
मित्रप्रियत्वात् यमुनाभावेऽपि तव शुद्धता ॥

सुरुचिर्न तु सर्वभक्षको द्विजराजो न कलङ्कभूषितः ।
धनदोऽपि कुवेरतां त्यजन् कमलेशोऽपि न वा जनार्द्दनः ॥

कुशासनरतोऽपि त्वं कुशासनविवर्ज्जितः ।
दानवारिसेवकोऽपि दानवारिविवर्जकः ॥

कलयसि कलिमलनाशं भजसि च जगदावासम् ।
चलयसि विनतत्रासं रचयसि नृप । सुरवासम् ॥

नानातीर्थसमाश्रयोद्विजकुलेनाराधितोभूयसा
शश्वत् सौरभशालिनां सुमनसामुल्लासहेतुस्तथा ।
गम्भीरोऽतिदुरासदोऽहितनृणां पङ्केकभूमिर्भवान्
मन्ये कोऽपि जलाशयोऽसि महतां तापस्य संशान्तये ॥

शङ्खचक्रपरिचिह्नितः करे पादयोर्ध्वजमुखादिलाञ्छितः ।
मालया वनजया च शोभितो वैष्णवाङ्गमखिलं त्वमाश्रितः ॥

सर्वेषां तापनाशाय दक्षिणो मलयाचलः ।
कथं न मयि दाक्षिण्यं कुर्य्यादाशंसनं मम ॥

त्वं दानवारिपरिपेवणमात्रकर्मा
नित्यादिकर्म्मसु तथा कृतदानधर्म्मा ।
लोकादिरक्षणविधौ कृतधर्म्मवर्म्मा
दानादिनाश्रितजने कृतदेवशर्म्मा ॥
उज्जृम्भते हि सरसां कमलोदयार्थम्
भास्वान् दिवेति विदितं नृप । लोकमध्ये ।
त्वं सर्वदा तु जगतां किल सर्वदाना
दुज्जृम्भसे नरपते ' कमलोदयार्थम् ॥
उदयेनैव सविता जगद्धर्मप्रवर्त्तकः ।
अर्कोदयेऽसि नृपते । सर्वधर्म्मप्रवर्त्तकः ॥
प्रश्वत् श्रुतोऽसि मनसा परिशीलितोऽसि
ध्यानेन मुद्रितदृशा च विलोकितोऽसि ॥
तस्मात्तु ते परिचयो मयि वर्त्ततेऽद्य
त्वय्येव मे परिचयाय ममैष यत्न ।
तव गुणनिकरान्तं नैव गन्तुं समर्था
वयमिति विरताः स्म श्रान्तियोगाच्च राजन् ।।
कलयसि गुणलेशं दोषजालं जहासि
गुणिगणगुणलेशादाप्ततोषो भवान् यत् ।
गुणानामाधारे गुणिजनगुणग्राहकवरे
दयासारे पारेवचन मनुवर्णैकनिलये
ममैषा विज्ञप्ति र्नयनपदवीमेत्य सहसा
सदा सानन्दं तं विरचयतु नित्यं रमयतु ॥
प्रशस्तिपत्रिका यत्नात् श्रीतारानाथशर्म्मणा ।
द्विजेन रचिता तुष्टै नृपस्यास्तु चिरं शिवम् ॥